२५ सक्तुर्नपुंसके च ।
२६ प्राग्रश्मेरकारान्तः ।
२७ कोपधः ।
२८ चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके ।
२९ कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च ।
३० टोपधः ।
३१ किरीटमुकुटललाटवटविटश्रृङ्गाटकराटलोष्टानि नपुंसके ।
३२ कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके च ।
३३ णोपधः ।
३४ ऋणलवणपर्णतोरणरणोष्णानि नपुंसके ।
३५ कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च।
३६ थोपधः ।
३७ काष्ठपृष्ठसिक्थोक्थानि नपुंसके ।
३८ काष्ठा दिगर्थाः स्त्रियाम्।
३९ तीर्थप्रोथयूथगाथानि नपुंसके च ।
४० नोपधः ।
४१ जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके ।
४२ मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसम्मानभवनवसनसम्भावनविभावनविमानानि नपुंसके च ।
४३ पोपधः ।
४४ पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके ।
४५ शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च ।
४६ भोपधः ।
४७ तलभं नपुंसकम् ।
४८ जृम्भं नपुंसके च ।
४९ मोपधः ।
५० रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ।
५१ संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च ।
५२ योपधः ।
५३ किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ।
५४ गोमयकषायमलयान्वयाव्ययानि नपुंसके च।
५५ रोपधः ।
५६ द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयंत्रनक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्रांगुलित्रभलत्राशस्त्रशास्त्रवस्त्रपत्रपात्रनक्षत्राणि नपुंसके ।
५७ शुक्रमदेवतायाम् ।
५८ चक्रवज्रान्धकारसारावारपारक्षीरतोमरश्रृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च ।
५९ षोपधः ।
६० शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ।
६१ यूषकरीषमिषविषवर्षाणि नपुंसके च ।
६२ सोपधः ।
६३ पनसबिसबुससाहसानि नपुंसके ।
६४ चमसांसरसनिर्यासोपवासकार्पासवासभासकासकांसमांसानि नपुंसके च ।

६५ कंसं चाप्राणिनि ।
६६ रश्मिदिवसाभिधानानि
६७ दीधितिः स्त्रियाम् ।
६८ दिनाहनी नपुंसके ।
६९ मानाभिधानानि ।
७० द्रोणाढकौ नपुंसके च ।
७१ खारीमानिके स्त्रियाम् ।
७२ दाराक्षतलाजासूनां बहुत्वं च ।
७३ नाव्ययपजनोपपदानि प्रणाङ्गपदानि ।
७४ मरुद्गरुदुत्तरहरित्विजः ।
७५ ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः ।
७६ ध्वजगजमुञ्जपुञ्जाः ।
७७ हस्तकुन्तान्तवातव्रातदूतधूर्तसूतचूतमुहूर्ताः ।
७८ षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ।
७९ वंशांशपुरोडाशाः ।
८० ह्रदकन्दकुन्दबुद्बुदशब्दाः ।
८१ अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः ।
८२ पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः ।
८३ सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः ।

## १ नपुंसकम् ।

२ भावे ल्युडन्तः ।
३ निष्ठा च ।
४ त्वष्यञौ तद्धितौ ।
५ कर्मणि च ब्राह्मणादिगुणवचनेभ्यः ।
६ यद्यढग्यगञ्छाश्च भावकर्मणि ।
७ द्वन्द्वैकत्वम् ।
८ अभाषायां हेमन्तशिशिरावहोरात्रे च ।
९ अनञ्कर्मधारयस्तत्पुरुषः ।
१० अनल्पे छाया ।
११ राजामनुष्यपूर्वा सभा ।
१२ सुरासेनाच्छायाशालानिशा स्त्रियां च ।
१३ शिष्टः परवत् ।
१४ अपथपुण्याहे नपुंसके ।
१५ संख्यापूर्वा रात्रिः ।
१६ द्विगुः स्त्रियां च ।
१७ इसुसन्तः ।
१८ अर्चिः स्त्रियां च ।
१९ छर्दिः स्त्रियामेव ।
२० मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि ।
२१ सीरार्थोदनाः पुंसि ।
२२ वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च ।
२३ अटवी स्त्रियाम् ।
२४ लोपधः ।
२५ तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि ।
२६ शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशूलाः पुंसि च ।
२७ शतादिः संख्या ।
२८ शतायुतप्रयुताः पुंसि च ।
२९ लक्षाकोटी स्त्रियाम् ।
३० शङ्कुः पुंसि च ।
३१ सहस्रः क्वचित् ।
३२ मन्द्व्यच्कोऽकर्तरि ।
३३ ब्रह्मन्पुंसि च ।
३४ नामरोमणी नपुंसके ।
३५ असन्तो द्व्यच्कः ।
३६ अप्सराः स्त्रियाम् ।
३७ त्रान्तः ।
३८ यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ।
३९ भृत्रामित्रच्छात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि ।
४० पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च ।
४१ बलकुसुमशुल्बयुद्धपत्तनरणाभिधानानि ।
४२ पद्मकमलोत्पलानि पुंसि च ।
४३ आहवसंग्रामौ पुंसि ।
४४ आजिः स्त्रियामेव ।
४५ फलजातिः ।
४६ वृक्षजातिः स्त्रियामेव ।

४७ वियज्जगत्सकृच्छक-न्पृषच्छकृद्यकृदुदश्वितः
४८ नवनीतावतानृतामृत-निमित्तवित्तचित्तपित्त व्रतरजतवृत्तपलितानि
४९ श्राद्धकुलिशदैवपीठकु-ण्डाङ्कदधिसक्थ्यक्ष्य-स्थ्यास्पदाकाशकण्व-बीजानि ।
५० दैवं पुंसि च ।
५१ धान्याज्यसस्यरूप्यप-ण्यवर्ण्यधृष्यहव्यकव्य-काव्यसत्यापत्यमूल्य-शिक्यकुड्यमद्यहर्म्य-तूर्यसैन्यानि ।
५२ द्वन्द्वबर्हदुःखबडिशपि-च्छबिम्बकुटुम्बकवच-वरशरवृन्दारकाणि ।
५३ अक्षमिन्द्रिये ।

१ स्त्रीपुंसयोः ।

२ गोमणियष्टिमुष्टिपाट-लिबस्तिशाल्मलित्रुटिमसिमरीचयः ।
३ मृत्युसीधुकर्कन्धु-किष्कुकण्डुरेणवः ।
४ गुणवचनमुकारान्तं नपुंसकं च ।
५ अपत्यार्थतद्धिते ।

१ पुंनपुंसकयोः ।

२ घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः ।
३ शृङ्गार्घनिदाघोद्यम-शल्यदृढाः ।
४ व्रजकुञ्जकुथकूर्चप्रस्थद-र्पार्भार्धर्चदर्भपुच्छाः ।
५ कबन्धौषधायुधान्ताः ।
६ दण्डमण्डखण्डशवसै-न्धवपार्श्वाकाशकुश-काशाङ्कुशकुलिशाः ।
७ गृहमेहदेहपट्टपटहाष्टा-पदाम्बुदककुदाश्च ।

१ अविशिष्टलिङ्गम् ।

२ अव्ययं कतियुष्मद-स्मदः ।
३ ष्णान्ता संख्या ।
४ गुणवचनं च ।
५ कृत्याश्च ।
६ करणाधिकरणयोर्ल्युट् ।
७ सर्वादीनि सर्वनामानि ।

इति श्रीपाणिनिमुनिप्रणीतं लिङ्गानुशासनं समाप्तम् ।